| | | | |
|---|---|---|---|
| महत् प्रहरणं | சிறந்த ஆயுதமும் | अतिरौद्रं | மிகக்கொடியதும் |
| महानादं | பேரொலிகொண்டதும் | अनाधृष्यं | அணுகமுடியாததும் |
| सर्वशत्रुनिबर्हणं | எல்லா சத்ருக்களையும் ஒழிக்கவல்லதும் | कालेन अपि | யமனாலும் |
| शैलशृङ्गनिभैः | மலைக்கொடுமுடிகளை நிகர்த்த | दुरासदं | தகைக்கவரியதும் |
| कूटैः | சிகரங்களால் | सर्वभूतानां | எல்லாப் பிராணிகளையும் |
| चितं | நிரம்பியதும் | त्रासनं | நடுங்கச்செய்வதும் |
| दृष्टिभयावहं | பார்க்க பயங்கரமானதும் | दारणं | பிளப்பதும் |
| सधूमं इव | புகையுடன்கூடியது போன்றதும் | भेदनं | சிதைப்பதும் |
| तीक्ष्णाग्रं | கூரிய நுனியுற்றதும் | रोषेण | கோபங்கொண்டு |
| युगान्ताग्निचयोपमं | ஊழிக்காலத்தீக்குவியலை நிகர்த்ததும் | प्रदीप्तं इव | ஜ்வலிப்பதுபோன்றிருப்பதுமான |
| | | शूलं | சூலாயுதத்தை |
| | | स्पृशन् | பற்றி |
| | | जग्राह | எடுக்கலுற்றான். |

**तच्छूलं परमक्रुद्धो जग्राह युधि वीर्यवान् । अनेकैः समरे शूरै राक्षसैः परिवारितः ॥**

| | | | |
|---|---|---|---|
| युधि | போரில் | राक्षसैः | அரக்கர்களால் |
| वीर्यवान् | வீர்யசாலியாகிய அவன் | परिवारितः | சூழப்பெற்று |
| समरे | போரில் | परमक्रुद्धः | மிகக்கோபங்கொண்டு |
| शूरैः | சூரர்களான | तत् | அந்த |
| अनेकैः | பல | शूलं | சூலத்தை |
| | | जग्राह | கைக்கொண்டான். |

**समुद्यम्य महाकायो ननाद युधि भैरवम् । संरक्तनयनो रोषात्स्वसैन्यमभिहर्षयन् ॥१६॥**

| | | | |
|---|---|---|---|
| महाकायः | பேருடல்பெற்றவனும் அவன் | स्वसैन्यं | தனது சேனையை |
| समुद्यम्य | துள்ளியெழுந்து | अभिहर्षयन् | உத்ஸாகப்படுத்திக்கொண்டு |
| रोषात् | கோபத்தால் | युधि | போரில் |
| संरक्तनयनः | கண்கள் சிவந்தவனாகி | भैरवं | பயங்கரமாய் |
| | | ननाद | கர்ஜித்தான். |

**पृथिवीं चान्तरिक्षं च दिशश्च प्रदिशस्तथा । प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥**

| | | | |
|---|---|---|---|
| तदा | அப்பொழுது | पृथिवीं च | பூமியையும் |
| राक्षसेन्द्रस्य | ராக்ஷஸமன்னனுடைய | अन्तरिक्षं च | ஆகாயத்தையும் |
| दारुणः | பயங்கரமான | दिशः च | திக்குகளையும் |
| शब्दः | சத்தமானது | प्रदिशः तथा | விதிக்குகளையும் |
| | | प्राकम्पयत् | நடுங்கச்செய்தது. |

**अतिनादस्य नादेन तेन तस्य दुरात्मनः। सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ १८ ॥**

| | | | |
|---|---|---|---|
| अतिनादस्य | பேரொலிகொண்ட | सर्वभूतानि | எல்லாப்பிராணிகளும் |
| दुरात्मनः | துஷ்டாத்மாவான | वित्रेसुः | நடுநடுங்கின. |
| तस्य | அவனுடைய | सागरः च | கடலும் |
| तेन | அந்த | | |
| नादेन | சத்தத்தால் | प्रचुक्षुभे | கலக்கமுற்றது. |

**स गृहीत्वा महावीर्यः शूलं तद्रावणो महत्। विनद्य सुमहानादं रामं परुषमब्रवीत् ॥१९॥**

| | | | |
|---|---|---|---|
| महावीर्यः | மகாவீர்யசாலியாகிய | सुमहानादं | பேரொலிகொண்டு |
| सः | அந்த | विनद्य | கர்ஜித்து |
| रावणः | ராவணன் | रामं | ஸ்ரீராமரைப்பார்த்து |
| तत् | அந்த | परुषं | கொடுமையாக |
| महत् शूलं | பெரும் சூலத்தை | अब्रवीत् | பின்வருமாறு |
| गृहीत्वा | கைக்கொண்டு | | மொழிந்தான்: |

**शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः। तव भ्रातृसहायस्य सद्यः प्राणान्हरिष्यति ॥**

| | | | |
|---|---|---|---|
| राम | "ராம! | अयं | இந்த |
| ते | உன்னிடம் | शूलः | சூலமானது |
| रोषात् | கோபத்தால் | भ्रातृसहायस्य | தம்பியைத் துணையாய்க் கொண்ட |
| मया | என்னால் | तव | உனது |
| उद्यतः | கொள்ளப்பட்ட | प्राणान् | உயிரை |
| वज्रसारः | வஜ்ராயுதத்தின் உறுதிகொண்ட | सद्यः | இக்கணமே |
| | | हरिष्यति | வாங்கப்போகிறது. |

**रक्षसामद्य शूराणां निहतानां चमूमुखे। त्वां निहत्य रणश्लाघिन्करोमि तरसा समम् ॥**

| | | | |
|---|---|---|---|
| रणश्लाघिन् | "போர்ப்புகழ்கொண்டவனே! | चमूमुखे | படைமுகத்தில் |
| | | निहतानां | கொல்லப்பட்ட |
| तरसा | விரைவாய் | शूराणां | சூரர்களான |
| त्वां | உன்னை | रक्षसां | அரக்கர்களுக்கு |
| निहत्य | கொன்று, | समं | சமானனாய் |
| अद्य | இப்பொழுது | करोमि | செய்கிறேன். |

**तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव ॥ २२ ॥**

| | | | |
|---|---|---|---|
| राघव | "ராம! | एषः | இதோ |
| इदानीं | இப்பொழுது | शूलेन | சூலத்தால் |
| तिष्ठ | சற்று நில்லு. | निहन्मि | வதைக்கின்றேன்." |
| त्वां | உன்னை | | |

**एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ २३ ॥**

| | | | |
|---|---|---|---|
| सः | அந்த | तत् | அந்த |
| राक्षसाधिपः | ராவணமன்னன் | शूलं | சூலத்தை |
| एवं | இங்ஙனம் | चिक्षेप | விடுத்தான். |
| उक्त्वा | சொல்லிவிட்டு | | |

**तद्रावणकरान्मुक्तं विद्युज्ज्वालासमाकुलम्। अष्टघण्टं महानादं वियद्गतमशोभत ॥ २४॥**

| | | | |
|---|---|---|---|
| रावणकरात् | ராவணனது கையால் | महानादं | பேரொலிகொண்டதுமான |
| मुक्तं | விடுக்கப்பட்டதும் | तत् | அது |
| विद्युज्ज्वाला-समाकुलं | மின்னல்போன்ற ஜ்வாலைகளால் நிறைந்ததும் | वियद्गतं | ஆகாயத்தை அடைந்ததாய் |
| अष्टघण्टं | எட்டுமணிகள் கட்டப்பெற்று | अशोभत | விளங்கிற்று. |

**तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम्। ससर्ज विशिखान्रामश्चापमायम्य वीर्यवान्॥**

| | | | |
|---|---|---|---|
| वीर्यवान् | வீர்யசாலியான | तत् | அந்த |
| राघवः | ரகுகுலதிலகர் | शूलं | சூலத்தை |
| रामः | ஸ்ரீராமர் | दृष्ट्वा | பார்த்து |
| ज्वलन्तं | ஜ்வலித்துக்கொண்டிருப்பதும் | चापं | வில்லை |
| | | आयम्य | வளைத்து |
| घोरदर्शनं | பயங்கரத்தோற்றமுற்றதுமான | विशिखान् | பாணங்களை |
| | | ससर्ज | விடுத்தார். |

**आपतन्तं शरौघेण वारयामास राघवः। उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः ॥२६॥**

| | | | |
|---|---|---|---|
| राघवः | ஸ்ரீராமர் | इव | எவ்வண்ணமோ அவ்வண்ணமே |
| उत्पतन्तं | கிளம்பிய | आपतन्तं | எதிர்த்துவரும் அதை (சூலத்தை) |
| युगान्ताग्निं | பிரளயாக்னியை | | |
| जलौघैः | ஜலவர்ஷங்களால் | शरौघेण | பாணசமூஹத்தால் |
| वासवः | இந்திரன் | वारयामास | தகைத்தார். |

**निर्ददाह स तान्बाणान्रामकार्मुकनिःसृतान्। रावणस्य महाशूलः पतङ्गानिव पावकः ॥**

| | | | |
|---|---|---|---|
| रावणस्य | ராவணனது | तान् | அந்த |
| सः | அந்த | बाणान् | பாணங்களை |
| महाशूलः | சிறந்த சூலாயுதமானது | पावकः | அக்னி |
| | | पतङ्गान् | விட்டில்களை |
| रामकार्मुक-निःसृतान् | ஸ்ரீராமரது வில்லினின்று வெளியார்ந்த | इव | எவ்வாறோ அவ்வாறே |
| | | निर्ददाह | பொசுக்கிவிட்டது. |

**दृष्ट्वा तान् भस्मसाद्भूताञ्छूलसंस्पर्शचूर्णितान्। सायकानन्तरिक्षस्थान्राघवः क्रोधमाहरत्॥**

| | | | |
|---|---|---|---|
| राघवः | ஸ்ரீராமர் | भस्मसाद्भूतान् | சாம்பலானவைகளாய் |
| अन्तरिक्षस्थान् | ஆகாயத்தையடைந்த | दृष्ट्वा | கவனித்து |
| तान् सायकान् | அந்த பாணங்களை | | |
| शूलसंस्पर्श-चूर्णितान् | சூலாயுதத்தின் ஸ்பர்சத்தால் தூளாகி | क्रोधं | கோபத்தை |
| | | आहरत् | கொண்டார். |

स तां मातलिनाऽऽनीतां शक्तिं वासवनिर्मिताम्। जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥

| | | | |
|---|---|---|---|
| सः | அந்த | आनीतां | கொண்டுவரப்பட்டதும் |
| रघुनन्दनः | ரகுகுலச்செல்வராகிய | | |
| राघवः | ஸ்ரீராமர் | वासवनिर्मितां | இந்திரனால் சிருஷ்டிக்கப்பட்டதுமான |
| परमक्रुद्धः | மிகக்கோபங்கொண்டவராய் | तां शक्तिं | அந்தச் சக்தியை |
| मातलिना | மாதலியால் | जग्राह | கைக்கொண்டார். |

सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना। नभः प्रज्वालयामास युगान्तोल्केव सप्रभा ॥

| | | | |
|---|---|---|---|
| बलवता | பலசாலியாகிய அவரால் | युगान्तोल्का | ஊழிக்கொள்ளி |
| | | इव | எவ்வண்ணமோ அவ்வண்ணமே |
| तोलिता | பிரயோகிக்கப்பட்ட | | |
| सा शक्तिः | அந்தச் சக்தி | सप्रभा | ஒளிகொண்டதாய் |
| घण्टाकृतस्वना | மணியோசை கொண்டதாய் | नभः | வானத்தை |
| | | प्रज्वालयामास | ஜ்வலிக்கச்செய்தது. |

सा क्षिप्ता राक्षसेन्द्रस्य तस्मिञ्छूले पपात ह ॥ ३१ ॥

| | | | |
|---|---|---|---|
| क्षिप्ता | பிரயோகிக்கப்பட்ட | तस्मिन् | அந்த |
| सा | அது | शूले | சூலத்தில் |
| राक्षसेन्द्रस्य | ராக்ஷஸமன்னனது | पपात ह | மோதியது. |

भिन्नः शक्त्या महाञ्छूलो निपपात हतद्युतिः ॥ ३२ ॥

| | | | |
|---|---|---|---|
| महान् | சிறந்த | भिन्नः | பிளவுண்டதாய் |
| शूलः | சூலமானது | हतद्युतिः | மகிமையற்று |
| शक्त्या | சக்தியால் | निपपात | கீழ்விழுந்தது. |

साधु साध्विति भूतानि प्रशशंसू रघूत्तमम् ॥ ३३ ॥

| | | | |
|---|---|---|---|
| भूतानि | பிராணிகள் | इति | என்று |
| साधु | "நன்றுமுடிந்தது, | रघूत्तमं | ஸ்ரீராமரை |
| साधु | நன்றுமுடிந்தது" | प्रशशंसुः | புகழ்ந்துகொண்டாடினார்கள். |

निर्बिभेद ततो बाणैर्हयानस्य महाजवान्। रामस्तीक्ष्णैर्महावेगैर्वज्रकल्पैः शितैः शरैः ॥

| | | | |
|---|---|---|---|
| रामः | ஸ்ரீராமர் | तीक्ष्णैः | கொடியவைகளான |
| ततः | அப்பொழுது | शरैः | கணைகளாலும் |
| अस्य | இவனது | महावेगैः | பெருவேகங்கொண்ட |
| महाजवान् | வேகங்கொண்ட | शितैः | கூரிய |
| हयान् | குதிரைகளை | बाणैः | பாணங்களாலும் |
| वज्रकल्पैः | வஜ்ராயுதத்தை நிகர்த்து | निर्बिभेद | பிளந்தார். |

निर्बिभेदोरसि ततो रावणं निशितैः शरैः । राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | निशितैः | கூரிய |
| राघवः | ஸ்ரீராமர் | शरैः | பாணங்களாலும் |
| परमायत्तः | மிக ஊக்கங்கொண்டவராய் | ललाटे | நெற்றியில் |
| | | त्रिभिः | மூன்று |
| रावणं | ராவணனை | पत्रिभिः | பாணங்களாலும் |
| उरसि | மார்பில் | निर्बिभेद | பிளந்தார். |

स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः। राक्षसेन्द्रः समूहस्थः फुल्लाशोक इवाबभौ ॥३६॥

| | | | |
|---|---|---|---|
| समूहस्थः | படையின் நடுவிலிருக்கும் | गात्रप्रस्रुतशोणितः | உடலினின்று ரத்தம் பெருக நின்றவனாய் |
| सः | அந்த | | |
| राक्षसेन्द्रः | ராக்ஷஸமன்னன் | फुल्लाशोकः | பூத்த அசோகமரம் |
| शरैः | பாணங்களால் | इव | போல் |
| भिन्नसर्वाङ्गः | எல்லா அங்கங்களும் பிளவுண்டவனாய் | आबभौ | பிரகாசித்தான். |

स रामबाणैरभिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः ।
जगाम खेदं च समाजमध्ये क्रोधं च चक्रे सुभृशं तदानीम् ॥ ३७ ॥

| | | | |
|---|---|---|---|
| सः | அந்த | क्षतजार्द्रगात्रः च | ரத்தம் வழிந்த உடலுடையவனாய் |
| निशाचरेन्द्रः | ராக்ஷஸமன்னன் | खेदं | வருத்தத்தை |
| समाजमध्ये | போர்க்களத்தின் நடுவில் | जगाम | கொண்டான். |
| | | तदानीं | அப்பொழுது |
| रामबाणैः | ராமபாணங்களால் | सुभृशं | மிக |
| अभिविद्धगात्रः | அவயவங்களில் தாக்கப்பட்டவனாய் | क्रोधं च | கோபத்தையும் |
| | | चक्रे | கொண்டான். |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
युद्धकाण्डे चतुरुत्तरशततमः सर्गः ॥

आदितः श्लोकाः 19581  युद्धकाण्डे आदितः श्लोकाः 4906

पञ्चोत्तरशततमः सर्गः—நூற்றைந்தாவது ஸர்க்கம் ॥ १०५ ॥

युद्धाद्रावणरथापवाहनम्—ராவணனது தேரை அப்புறப்படுத்துவது.

स तेन तु तथा क्रोधात्काकुत्स्थेनार्दितो रणे । रावणः समरश्लाघी महाक्रोधमुपागमत् ॥

| | | | |
|---|---|---|---|
| समरश्लाघी | போர்புகழ்கொண்டவனை | क्रोधात् | கோபங்கொண்டு |
| सः | அந்த | तथा | அவ்வண்ணமாய் |
| रावणः | ராவணன் | अर्दितः | துன்புறுத்தப்பட்டவனாய் |
| तु | அப்பொழுது | | |
| रणे | போரில் | महाक्रोधं | பெருஞ்சினத்தை |
| तेन काकुत्स्थेन | அந்த ஸ்ரீராமரால் | उपागमत् | கொண்டான். |

स दीप्तनयनो रोषाच्चापमायम्य वीर्यवान्। अभ्यर्दयत्सुसंक्रुद्धो राघवं परमाहवे ॥ २ ॥

| | | | |
|---|---|---|---|
| वीर्यवान् | வீர்யவானாகிய | चापं | வில்லை |
| सः | அவன் | आयम्य | வளைத்து |
| सुसंक्रुद्धः | மிகச்சினங்கொண்ட | परमाहवे | கடும்போரில் |
| रोषात् | சினத்தால் [வாறு | राघवं | ஸ்ரீராமனை |
| दीप्तनयनः | கண்கள் ஜ்வலிக்கின்ற வாறாய் | अभ्यर्दयत् | தாக்கினான். |

बाणधारासहस्रैस्तैः स तोयद इवाम्बरात्। राघवं रावणो बाणैस्तटाकमिव पूरयत् ॥३॥

| | | | |
|---|---|---|---|
| सः | அந்த | राघवं | ஸ்ரீராமனை |
| रावणः | ராவணன் | बाणधारासहस्रैः | சரஜாலங்களால் நெருக்குண்ட |
| अम्बरात् | ஆகாயத்திலிருந்து | | |
| तोयदः | மேகம் | तैः | அந்த |
| तटाकं | ஒரு தடாகத்தை | बाणैः | பாணங்களால் |
| इव | எவ்வண்ணமோ அவ்வண்ணமே | इव | முற்றும் |
| | | पूरयत् | நிரப்பினான். |

पूरितः शरजालेन धनुर्मुक्तेन संयुगे। महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥४॥

| | | | |
|---|---|---|---|
| महागिरिः इव | மாமலைபோல் | धनुर्मुक्तेन | வில்லினின்று விடுக்கப்பட்ட |
| अकम्प्यः | சலிக்காதவரான | शरजालेन | பாணஜாலத்தால் |
| काकुत्स्थः | ஸ்ரீராமர் | पूरितः | நிரப்பப்பட்டவராய் |
| संयुगे | போரில் | प्रकम्पते न | சலியாதிருந்தார். |

स शरैः शरजालानि वारयन्समरे स्थितः। गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान् ॥

| | | | |
|---|---|---|---|
| समरे | போரில் | सूर्यस्य | சூரியனுடைய |
| वीर्यवान् | தனிவீரராய் | गभस्तीन् इव | கிரணங்களை நிகர்த்த |
| स्थितः | நிற்கும் | शरजालानि | பாணஜாலங்களை |
| सः | அவர் | प्रतिजग्राह | மீண்டும் கைக்கொண்டார். |
| शरैः | பாணங்களால் | | |
| वारयन् | தகைப்பவராய் | | |

ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः। निजघानोरसि क्रुद्धो राघवस्य महात्मनः ॥

| | | | |
|---|---|---|---|
| क्षिप्रहस्तः | கரவேகமமைந்த | राघवस्य | ஸ்ரீராமரது |
| निशाचरः | அரக்கன் | उरसि | மார்பில் |
| क्रुद्धः | சினங்கொண்டு | शरसहस्राणि | பலபாணங்களை |
| ततः | அப்பொழுது | निजघान | நாட்டினான். |
| महात्मनः | மகாத்மாவாகிய | | |

स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः । दृष्टः फुल्ल इवारण्ये सुमहान्किंशुकद्रुमः ॥७॥

| | | | |
|---|---|---|---|
| सः | அந்த | अरण्ये | காட்டில் |
| लक्ष्मणाग्रजः | ஸ்ரீராமர் | फुल्लः | பூத்த |
| समरे | போரில் | सुमहान् | பெரிய |
| शोणितसमादिग्धः | ரத்தத்தால் பூசப்பட்டவராய் | किंशुकद्रुमः इव | பலாசமரம்போல் |
| | | दृष्टः | காணப்பட்டார். |

शराभिघातसंरब्धः सोऽपि जग्राह सायकान् । काकुत्स्थः सुमहातेजा युगान्तादित्यतेजसः ॥

| | | | |
|---|---|---|---|
| सुमहातेजाः | மிக தேஜஸ்வியாகிய | युगान्तादित्यतेजसः | ஊழிச்சூரியனை நிகர்த்த ஒளிகொண்டவைகளான |
| सः काकुत्स्थः अपि | அந்த ஸ்ரீராமரும் | सायकान् | பாணங்களை |
| शराभिघातसंरब्धः | பாணங்களின் அடியால் ஆவேசங்கொண்டவராய் | जग्राह | கைக்கொண்டார். |

ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ । शरान्धकारे समरे नोपालक्षयतां तदा ॥९॥

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | शरान्धकारे | பாணங்களால் [இருண்ட |
| सुसंरब्धौ | மிக ஆவேசங்கொண்டவர்களாய் | समरे | போரில் |
| तौ | அந்த | अन्योन्यं | ஒருவரையொருவர் |
| रामरावणौ | ஸ்ரீராமர், ராவணன் | तदा | அப்பொழுது |
| उभौ | இருவர்களும் | उपालक्षयतां न | கண்டுகொள்ளாதிருந்தனர். |

ततः क्रोधसमाविष्टो रामो दशरथात्मजः । उवाच रावणं वीरः प्रहस्य परुषं वचः ॥१०॥

| | | | |
|---|---|---|---|
| वीरः | வீரரும் | रावणं | ராவணனைப்பார்த்து |
| दशरथात्मजः | தசரதசக்கிரவர்த்தியாரின் திருமகனாரு [மாகிய | प्रहस्य | நகைத்து |
| रामः | ஸ்ரீராமர் | परुषं | கடுமையான |
| ततः | அப்பொழுது | वचः | சொல்லொன்றை |
| क्रोधसमाविष्टः | கோபம் மேலிட்டவராய் | उवाच | பின்வருமாறு அறைந்தார் |

मम भार्या जनस्थानादज्ञानाद्राक्षसाधम । हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान् ॥

| | | | |
|---|---|---|---|
| राक्षसाधम | "இராக்ஷஸப்பதரே! | अज्ञानात् | அறியாதவளாய் |
| ते | உன்னால் | हृता | திருடிக்கொண்டு போகப்பட்டனள். |
| विवशा | பராதீனயான | | |
| मम | எனது | यस्मात् तस्मात् | எதுவோ அந்தக்கார [ணத்தால் |
| भार्या | மனைவி | त्वं | நீ |
| जनस्थानात् | ஜனஸ்தானத்திலிருந்து | वीर्यवान् | வீர்யசாலி |
| | | असि न | அல்ல. |

**मया विरहितां दीनां वर्तमानां महावने । वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ॥१२॥**

| | | | |
|---|---|---|---|
| मया | " என்னை | प्रसभं | பலாத்காரமாய் |
| विरहितां | பிரிந்து | हृत्वा | திருடிவிட்டு |
| महावने | பெருங்கானில் | अहं शूरः | 'நான் சூரன்' |
| वर्तमानां | இருக்கும் | इति | என்று |
| दीनां | ஏக்கங்கொண்ட | मन्यसे | நினைத்துக்கொண்டி- |
| वैदेहीं | ஜானகியை | | ருக்கின்றனை. |

**स्त्रीषु शूर विनाथासु परदाराभिमर्शक । कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे ॥१३॥**

| | | | |
|---|---|---|---|
| परदाराभिमर्शक | " பிறர்மனைவிகளை | कृत्वा | புரிந்து |
| शूर | சூரனே! [விழையும் | अहं | 'நான் |
| विनाथासु | ரக்ஷகர் இல்லாத | शूरः | சூரன்' |
| स्त्रीषु | பெண்களிடம் | इति | என்று |
| कापुरुषं | இழிய | मन्यसे | நினைத்துக்கொண்டி- |
| कर्म | தொழிலை | | ருக்கின்றனை. |

**भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित । दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥१४॥**

| | | | |
|---|---|---|---|
| भिन्नमर्याद | " நெறிகெட்டவனே! | उपादाय | நாடி |
| निर्लज्ज | வெட்கமற்றவனே! | अहं | 'நான் |
| चारित्रेषु | நன்னடக்கைகளில் | शूरः | சூரன்' |
| अनवस्थित | நாட்டமற்றவனே! | इति | என்று |
| दर्पात् | செருக்கால் | मन्यसे | நினைத்துக்கொண்டி- |
| मृत्युं | நமனை | | ருக்கின்றனை. |

**शूरेण धनदभ्रात्रा बलैः समुदितेन च । श्लाघनीयं यशस्यं च कृतं कर्म महत्त्वया ॥**

| | | | |
|---|---|---|---|
| धनदभ्रात्रा | " குபேரனது தம்பி- யும் | श्लाघनीयं | கொண்டாடத்தக்க- தும் |
| शूरेण | சூரனும் | यशस्यं च | புகழுக்குப் பாத்திர- |
| बलैः | சேனைகளோடு | महत् | பெரும் [மானதுமான |
| समुदितेन च | கூடியவனுமான | कर्म | காரியம் |
| त्वया | உன்னால் | कृतम् | செய்துமுடிக்கப்பட்- டது. |

**उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च । कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत्फलम् ॥**

| | | | |
|---|---|---|---|
| उत्सेकेन | " செருக்கால் | कर्मणः | காரியத்தின் |
| अभिपन्नस्य | விளைந்ததும் | सुमहत् | பெரும் |
| गर्हितस्य | இழிந்ததும் | फलं | பயனை |
| अहितस्य च | நன்மைக்கிடமில்லா- ததுமான | अद्य | இன்று |
| | | इदानीं | இப்பொழுது |
| तस्य | அந்த | प्राप्नुहि | நீ பெறுவாய். |

**शूरोऽहमिति चात्मानमवगच्छसि दुर्मते ॥ १७ ॥**

| | | | |
|---|---|---|---|
| दुर्मते | "துர்ப்புத்தியே! | इति | என்று |
| आत्मानं | உன்னை | अवगच्छसि | எண்ணிக்கொண்டிருக்கின்றனை. |
| अहं च | 'நான்தான் | | |
| शूरः | சூரன்" | | |

**नैव लज्जाऽस्ति ते सीतां चोरवद्व्यपकर्षतः ॥ १८ ॥**

| | | | |
|---|---|---|---|
| सीतां | "சீதையை | ते | உனக்கு |
| चोरवत् | திருடன்போல | लज्जा | வெட்கம் |
| व्यपकर्षतः | திருடிய | अस्ति न एव | இல்லவே இல்லை. |

**यदि मत्सन्निधौ सीता धर्षिता स्यात्त्वया बलात् । भ्रातरं तु खरं पश्येस्तदा मत्सायकैर्हतः ॥**

| | | | |
|---|---|---|---|
| त्वया | "உன்னால் | तदा | அப்பொழுது |
| मत्सन्निधौ | என் முன்னிலையில் | मत्सायकैः | எனது பாணங்களால் |
| सीता | சீதை | हतः | கொல்லப்பட்ட நீ |
| बलात् | பலாத்காரமாய் | भ्रातरं | தம்பியாகிய |
| धर्षिता स्यात् | கிட்டப்பெற்றிருப்பாள் | खरं तु | கரனையும் |
| यदि | ஆகில் | पश्येः | கண்கூடாய்த்தரிசிப்பாய். |

**दिष्ट्याऽसि मम दुष्टात्मंश्चक्षुर्विषयमागतः ॥ २० ॥**

| | | | |
|---|---|---|---|
| दुष्टात्मन् | "துராத்மாவே! | आगतः असि | கிட்டிவிட்டனை. |
| मम | எனது | दिष्ट्या | பேஷ், எனது கொள்கை நிறைவேறியது. |
| चक्षुर्विषयं | கட்புலனை | | |

**अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ २१ ॥**

| | | | |
|---|---|---|---|
| अद्य | "இப்பொழுது | त्वां | உன்னை |
| | | यमसादनं | நமனுலகுக்கு |
| तीक्ष्णैः सायकैः | கூரிய பாணங்களால் | नयामि | அனுப்பிவைக்கிறேன். |

**अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् । क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥**

| | | | |
|---|---|---|---|
| अद्य | "இப்பொழுது | ज्वलितकुण्डलं | ஜ்வலிக்கும் குண்டலங்களுற்ற |
| मच्छरैः | எனது பாணங்களால் | ते | உனது |
| छिन्नं | அறுக்கப்பட்டு | शिरः | தலையை |
| रणपांसुषु | போர்புழுதிகளில் | क्रव्यादाः | ஊனுண்பவைகள் |
| विकीर्णं | புரளும் | व्यपकर्षन्तु | இங்குமங்கும் இழுக்கட்டும். |

**निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण । पिबन्तु रुधिरं तर्षाच्छरशल्यान्तरोत्थितम् ॥**

| | | | |
|---|---|---|---|
| रावण | "ராவண! | निपत्य | உட்கார்ந்து |
| गृध्राः | கழுகுகள் | शरशल्यान्तरोत्थितं | பாணப்புண்களினின்று வெளிவரும் |
| क्षितौ | பூமியில் | रुधिरं | ரத்தத்தை |
| क्षिप्तस्य | வீழ்த்தப்பட்ட | तर्षात् | தாகத்துடன் |
| ते उरसि | உனது மார்பில் | पिबन्तु | பருகட்டும். |

अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते। कर्षन्त्वान्त्राणि पतगा गरुत्मन्त इवोरगान्॥

| | | | |
|---|---|---|---|
| अद्य | " இப்பொழுது | आन्त्राणि | நரம்புகளை |
| मद्बाणभिन्नस्य | எனது பாணங்களால் பிளவுண்டு | पतगाः | பறவைகள், |
| | | उरगान् | பாம்புகளை |
| गतासोः | உயிரிழந்து | गरुत्मन्तः | கருடர்கள் |
| पतितस्य | சாய்ந்த | इव | எவ்வாறோ அவ்வாறே, |
| ते | உனது | कर्षन्तु | இழுக்கட்டும். |

दुष्टोऽसि महतः कालाद्दिष्ट्या दृष्टिपथं गतः। अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम्॥

| | | | |
|---|---|---|---|
| दुष्टः | " துஷ்டனாகிய நீ | अद्य | இப்பொழுது |
| महतः | நீண்ட | सीताहरणसंभवं | ஸீதையைத் திருடிய தாலுண்டாகிய |
| कालात् | காலத்திற்குப்பின் | | |
| दृष्टिपथं | கட்புலனை | क्रोधं | சினத்தை |
| गतः असि | அடைந்திருக்கின்றாய். | विमोक्ष्यामि | தணித்துக்கொள் வேன்." |
| दिष्ट्या | பேஷ், கோரியது கிட்டிற்று | | |

इत्येवं संवदन्वीरो रामः शत्रुनिबर्हणः। राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥ २६ ॥

| | | | |
|---|---|---|---|
| शत्रुनिबर्हणः | சத்ருஸம்ஹாரகரான | समीपस्थं | சமீபத்திலிருக்கும் |
| वीरः | வீரராகிய | राक्षसेन्द्रं | ராக்ஷஸோத்தமனை |
| रामः | ஸ்ரீராமர் | शरवर्षैः | பாணவர்ஷங்களால் |
| इति एवं | மேற்கண்டவாறு | | |
| संवदन् | கூறிக்கொண்டே | अवाकिरत् | பொழிந்தார். |

बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे। रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ॥ २७ ॥

| | | | |
|---|---|---|---|
| शत्रोः | சத்ருவின் | बलं | ஆற்றலும் |
| निधनकांक्षिणः | வதையைக்கோரிய | हर्षः च | உத்ஸாஹமும் |
| रामस्य | ஸ்ரீராமருக்கு | अस्त्रबलं एव | அஸ்திரசக்தியும் |
| संयुगे | போரில் | | |
| वीर्यं | ஆண்மை | च | { அவ்வண்ணமே இரட்டித்து விளங்கியது. |
| द्विगुणं बभूव | இரட்டித்துவிளங்கியது. | | |

प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः। प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥२८॥

| | | | |
|---|---|---|---|
| विदितात्मनः | ஸர்வமுமறிந்த அவருக்கு | महातेजाः | மகாதேஜஸ்வியாகும [வர் |
| | | प्रहर्षात् | உத்ஸாஹத்தால் |
| सर्वाणि | எல்லா | शीघ्रहस्ततरः | மிக விரைந்த கைவேகங்கொண்டவராய் |
| अस्त्राणि च | அஸ்திரங்களும் | | |
| प्रादुर्बभूवुः | முன்தோன்றின. | अभवत् | ஆனார். |

शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः। भूय एवार्दयद्रामो रावणं राक्षसान्तकृत्॥

| | | | |
|---|---|---|---|
| सः | அந்த | विज्ञाय | கவனித்து |
| रामः | ஸ்ரீராமர் | राक्षसान्तकृत् | அரக்கர்களுக்கு அழி |
| एतानि | இந்த | | வை விளைவிப்பவராய் |
| आत्मगतानि | தன்னிடம் தோன்றிய | रावणं | ராவணனை |
| शुभानि | நற் | भूयः एव | மீளவும் |
| चिह्नानि | சகுனங்களை | अर्दयत् | துன்புறுத்தினார். |

हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात्। हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥३०॥

| | | | |
|---|---|---|---|
| हरीणां | வானரர்களின் | हन्यमानः | புடைக்கப்படும் |
| अश्मनिकरैः च | கற்குவியல்களாலும் | दशग्रीवः | ராவணன் |
| राघवात् | ஸ்ரீராமரிடமிருந்து | विघूर्णहृदयः | உள்ளமுதறல்கொண் |
| शरवर्षैः च | பாணவர்ஷங்களாலும் | अभवत् | ஆனான். [டவனாய் |

यदा च शस्त्रं नारेभे न व्यकर्षच्छरासनम्। नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना॥
क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च। न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः॥
सूतस्तु रथनेताऽस्य तदवस्थं समीक्ष्य तम्। शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत्॥

| | | | |
|---|---|---|---|
| यदा | எப்பொழுது | शस्त्राणि च | ஆயுதங்களும் |
| शस्त्रं | ஆயுதத்தை | रणार्थाय | போரில் பயனுற்றன |
| आरेभे न | தொடவில்லையோ | | வாய் |
| शरासनं च | வில்லையும் | वर्तन्ते न | ஆகவில்லையோ அப் |
| व्यकर्षत् न | வளைக்கவில்லையோ | अस्य | இவனது [பொழுது |
| विक्लवेन | கலவரமுற்ற | रथनेता | தேரோட்டும் |
| अन्तरात्मना | உள்ளத்தால் | सूतः तु | சாரதியும் |
| अस्य | இவனது | तदवस्थं | அந்நிலைமைகொண்ட |
| वीर्यं | பிரதாபமும் | तं | அவனை |
| प्रत्यकरोत् न | செல்லாதிருந்ததோ | समीक्ष्य | கவனித்து |
| यदा | எப்பொழுது | असंभ्रान्तः | கலவரமுற்றவனாய் |
| तेन | அவனால் | शनैः | மெல்ல |
| क्षिप्ताः | விடுக்கப்பட்ட | युद्धात् | போரினின்று |
| शराः अपि च | பாணங்களும் | तस्य | அவனது |
| मृत्युकाले | சாவு(கிட்டிய)காலத்தில் | रथं | தேரை |
| अभिवर्ततः | போருக்கு வந்திருக் | अपवाहयत् | அப்புறஞ்செலுத்தி |
| विविधानि | பல [கும் அவனது | | னான். |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
युद्धकाण्डे पञ्चोत्तरशततमः सर्गः॥

आदितः श्लोकाः 19614 युद्धकाण्डे आदितः श्लोकाः 4939



## रावणरथप्रत्यानयनम्—ராவணனது தேரைத் திருப்பிக்கொண்டுவருவது.

**स तु मोहात्सुसंक्रुद्धः कृतान्तबलचोदितः। क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १ ॥**

| | | | |
|---|---|---|---|
| कृतान्तबलचोदितः | நமனது சக்திக்காட்பட்ட | सुसंक्रुद्धः | மிகக்கோபங்கொண்டவனாகி |
| सः | அந்த | क्रोधसंरक्तनयनः | கோபத்தால் கண்கள் சிவந்தவனாய் |
| रावणः तु | ராவணனும் | सूतं | சாரதியைப்பார்த்து |
| मोहात् | மதிமயக்கத்தால் | अब्रवीत् | பின்வருமாறு மொழிந்தான்: |

**हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम्। भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २ ॥**
**विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम्। मामवज्ञाय दुर्बुद्धे स्वया बुद्ध्या विचेष्टसे ॥**

| | | | |
|---|---|---|---|
| दुर्बुद्धे | "கெடுமதியனே! | इव | போன்றவாறும் |
| पौरुषेण विवर्जितं | ஆண்மையற்று | मायाभिः विमुक्तं | மாயைகளில்லாதவனை |
| अशक्तं | கையாலாகாத | इव | போன்றவாறும், |
| हीनवीर्यं | இழிவீர்யங்கொண்டவனை | अस्त्रैः बहिष्कृतं | அஸ்திரமந்திரங்களுக்கப்புறப்பட்டவனை |
| इव | போன்றவாறும், | इव | போன்றவாறும், |
| असत्त्वं | ஆற்றலற்று | मां | என்னை |
| भीरुं | பயங்காளியான | अवज्ञाय | அவமதித்து |
| लघुं | அற்பனை | स्वया | உனது |
| इव | போன்றவாறும், | बुद्ध्या | புத்தியைக்கொண்டு |
| तेजसा विहीनं | பரிதாபமற்றவனை | विचेष्टसे | நடக்கலுற்றாய். |

**किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च। त्वया शत्रोः समक्षं मे रथोऽयमपवाहितः ॥४॥**

| | | | |
|---|---|---|---|
| त्वया | "உன்னால் | समक्षं | முன்னிலையில் |
| मां | என்னை | मे | எனது |
| अवज्ञाय | அவமதித்தும் | अयं रथः | இந்த ரதமானது |
| मच्छन्दं | எனதபிப்பிராயத்தை | किमर्थं | என்னகாரணமாய் |
| अनवेक्ष्य च | எதிர்பாராமலும் | अपवाहितः | அப்புறஞ்செலுத்தப்பட்டது? |
| शत्रोः | சத்ருவுக்கு | | |

**त्वयाऽद्य हि ममानार्य चिरकालसमार्जितम्। यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥**

| | | | |
|---|---|---|---|
| अनार्य | "சீலங்குலைந்தவனே! | यशः | புகழும் |
| अद्य हि | இப்பொழுதோ | वीर्यं | ஆற்றலும் |
| त्वया | உன்னால் | तेजः च | ஆண்மையும் |
| मम | எனது | प्रत्ययः च | நம்பிக்கையும் |
| चिरकालसमार्जितं | வெகுகாலமாகச்சம்பாதிக்கப்பெற்ற | च | ஆகிய எல்லாமும் |
| | | विनाशितः | அழிக்கப்பட்டது. |

**शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः। पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया॥**

| | | | |
|---|---|---|---|
| प्रख्यातवीर्यस्य | "புகழ்படைத்து பிரதாபங்கொண்டு | युद्धलुब्धः | போராவல் கொண்டிருந்த |
| विक्रमैः | பராக்கிரமங்களால் | अहं | நான் |
| रञ्जनीयस्य | காமுறத்தக்க | त्वया | உன்னால் |
| शत्रोः | மாற்றான் | कापुरुषः | இழிபுருஷனாக |
| पश्यतः | பார்த்துக்கொண்டிருக்கையில் | कृतः | செய்யப்பட்டேன். |

**यस्त्वं रथमिमं मोहान्न चोद्वहसि दुर्मते। सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः॥ ७॥**

| | | | |
|---|---|---|---|
| दुर्मते | "கெடுமதியனே! | उद्वहसि न | ஓட்டிச்செல்லாதிருக்கின்றனையோ, |
| यः | எந்த | अयं | இந்த |
| त्वं | நீ | मे | எனது |
| मोहात् | மதிமயக்கங்கொண்டு | प्रतितर्कः | அனுமானம் |
| इमं | இந்த | सत्यः | உண்மையே. |
| रथं | ரதத்தை | त्वं | நீ |
| च | இன்னும் | परेण | சத்ருவால் |
| | | उपस्कृतः | தயாரிக்கப்பட்டவன். |

**न हि तद्विद्यते कर्म सुहृदो हितकाङ्क्षिणः। रिपूणां सदृशं चैतन्न त्वयैतत्स्वनुष्ठितम्॥**

| | | | |
|---|---|---|---|
| तत् | "அந்த | रिपूणां च | சத்ருக்களுக்கே |
| कर्म हि | காரியமோ | सदृशं | ஏற்றது. |
| हितकांक्षिणः | நலத்தை நாடிய | तु | இப்பொழுது |
| सुहृदः | நண்பனிடம் | एतत् | இது |
| विद्यते न | இராது. | त्वया | உன்னால் |
| एतत् | இது | स्वनुष्ठितं न | நன்மைக்காய்ச்செய்யப்படவில்லை. |

**निवर्तय रथं शीघ्रं यावन्नोपैति मे रिपुः। यदि वाऽध्युषितो वाऽसि स्मर्यन्ते यदि वा गुणाः॥**

| | | | |
|---|---|---|---|
| अध्युषितः | "அடுத்துப் பிழைத்தவனாக | मे | எனது |
| | | रिपुः | சத்ரு |
| असि यदि वा | இருக்கிறாயாகில் | उपैति न यावत् | நாடிவருவதற்குள் |
| गुणाः वा | உபகாரங்களாவது | शीघ्रं | விரைவாய் |
| स्मर्यन्ते यदि वा | நினைக்கப்படுகின்றனவானாலும் | रथं | ரதத்தை |
| | | निवर्तय | திருப்புவாயாக." |

**एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना। अब्रवीद्रावणं सूतो हितं सानुनयं वचः॥ १०॥**

| | | | |
|---|---|---|---|
| तु | அப்பொழுது | सूतः | சாரதி |
| अबुद्धिना | அறிவிலியாகும் அவனால் | रावणं | ராவணனைப் பார்த்து |
| एवं | மேற்கண்டவாறு | सानुनयं | தேற்றரவுடன்கூட |
| परुषं | கொடுமையாய் | हितं | நன்மை பயக்கும் |
| उक्तः | ஏசப்பெற்ற | वचः | சொல்லொன்றை |
| हितबुद्धिः | நலத்தை நாடிநின்ற | अब्रवीत् | பின்வருமாறு மொழிந்தான்: |

न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः ।
न प्रमत्तो न निःस्नेहो विस्मृता न च सत्क्रिया ॥ ११ ॥

| | | | |
|---|---|---|---|
| अस्मि | "நான் | उपजप्तः | தயாரிக்கப்பட்டவன் |
| भीतः | பயந்தவன் | न | அல்லன். |
| न | அல்லன். | प्रमत्तः | செருக்குற்றவனும் |
| अस्मि | நான் | न | அல்லன். |
| मूढः | அறிவிலி | निःस्नेहः | அன்பற்றவனும் |
| न | அல்லன். | न | அல்லன். |
| अस्मि | நான் | सत्क्रिया च | உபகாரமும் |
| शत्रुभिः | சத்ருக்களால் | विस्मृता न | மறக்கப்படவில்லை. |

मया तु हितकामेन यशश्च परिरक्षता । स्नेहप्रस्कन्नमनसा प्रियमित्यप्रियं कृतम् ॥ १२ ॥

| | | | |
|---|---|---|---|
| हितकामेन | "நன்மையைக்கோரி | तु | இப்பொழுது |
| यशः | புகழை [யவனும் | प्रियं | நன்மை |
| परिरक्षता | ரக்ஷிக்கின்றவனும் | इति | எனக்கொண்டு |
| स्नेहप्रस्कन्नमनसा च | அன்பு ததும்பிய மனங்கொண்டவனுமான | अप्रियं | தேவரீர் விரும்பப் படாதது |
| मया | என்னால் | कृतम् | செய்யப்பட்டது. |

नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतम् । कश्चिल्लघुरिवानार्यो दोषतो गन्तुमर्हसि ॥

| | | | |
|---|---|---|---|
| महाराज | "மகாராஜரே! | त्वं | தேவரீர் |
| प्रियहिते | நலத்திலும் க்ஷேமத்திலும் | अनार्यः | சீலமிலா |
| | | कश्चित् | ஒரு |
| रतं | ஈடுபட்டிருக்கும் | लघुः इव | சாதாரணன்போன்று |
| मां | என்னை | दोषतः गन्तुं | குற்றங்கொள்ள |
| अस्मिन् अर्थे | இந்தக் காரியத்தில் | अर्हसि न | கூடாது. |

श्रूयतां त्वभिधास्यामि यन्निमित्तं मया रथः । नदीवेग इवाभोगे संयुगे विनिवर्तितः ॥

| | | | |
|---|---|---|---|
| आभोगे | "மேட்டில் | यन्निमित्तं | எதுகாரணமாய் |
| नदीवेगः | நதிவெள்ளம் | विनिवर्तितः | திருப்பிவிடப்பட்டதோ அதை |
| इव | எவ்வண்ணமோ அவ்வண்ணமே | अभिधास्यामि | விண்ணப்பித்துக் கொள்கிறேன். |
| संयुगे | போரில் | तु | இப்பொழுது |
| रथः | ரதமானது | श्रूयतम् | செவிசாய்க்கப்படட்டும். |
| मया | என்னால் | | |

श्रमं तवावगच्छामि महता रणकर्मणा । न हि ते वीर सौमुख्यं प्रहर्षं वोपधारये ॥१५॥

| | | | |
|---|---|---|---|
| तव | "தேவரீருக்கு | वीर | "சூரரே! |
| महता | பெரும் | ते हि | தேவரீரிடமோ |
| रणकर्मणा | போர்த்தொழிலால் | सौमुख्यं | முகக்களையையும் |
| श्रमं | களைப்பை | प्रहर्षं वा | உத்ஸாஹத்தையும் |
| अवगच्छामि | அறிந்துகொண்டேன். | उपधारये न | நான் காணவில்லை. |

रथोद्वहनखिन्नाश्च त इमे रथवाजिनः । दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६ ॥

| | | | |
|---|---|---|---|
| ते | " அந்த | इव | எவ்வாறோ அவ்வாறே |
| इमे | இந்த | घर्मपरिश्रान्ताः | வெய்யிலால் களைத்து |
| रथवाजिनः च | தேர்க்குதிரைகளும் | दीनाः | சோர்ந்தவைகளாய் |
| वर्षहताः | மழைகளால் தாக் | रथोद्वहनखिन्नाः | ரதத்தைவகித்துச்செ |
| गावः | பசுக்கள் [குண்ட | | ல்ல வருத்தமுற்றன. |

निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः । तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥

| | | | |
|---|---|---|---|
| नः | " நமக்கு | अभिपन्नेषु | உண்டாகிய |
| भूयिष्ठं | பலவாய் | तेषु तेषु | அவையவைகளிலும் |
| यानि निमित्तानि | எந்தச் சகுனங்கள் | अप्रदक्षिणं च | அசுபத்தையே |
| प्रादुर्भवन्ति | தோன்றினவோ | लक्षयामि | காண்கின்றேன். |

देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च । दैन्यं खेदश्च हर्षश्च रथिनश्च बलाबलम् ॥
स्थलनिम्नानि भूमेश्च समानि विषमाणि च । युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥
उपयानापयाने च स्थानं प्रत्यपसर्पणम् । सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २० ॥

| | | | |
|---|---|---|---|
| रथस्थेन | "ரதத்திலிருக்கும் | स्थलनिम्नानि | பள்ள இடங்களும் |
| रथकुटुम्बिना | தேரோட்டும் சாரதி | समानि | சமஇடங்களும் |
| | யால் | विषमानि च | தாறுமாறான விடங் |
| देशकालौ च | தக்க இடமும் தக்க | | களும் |
| | காலமும் | परस्य | மாற்றானின் |
| विज्ञेयौ | கவனிக்கத்தக்கவை. | अन्तरदर्शनं च | ரந்திரத்தை அறித |
| लक्षणानि | சகுனதிலக்ஷணங் | | லும் |
| | களும் | उपयानापयाने च | கிட்டிப்போவதும் |
| रथिनः | ரதத்திலிருக்கும் | | எட்டிப்போவதும் |
| | வீரனின் | स्थानं | நிற்றலும் |
| इङ्गितानि च | அங்கக்குறிப்புகளும் | प्रत्यपसर्पणं | எதிர்த்துச்செல்லு |
| दैन्यं | ஏக்கமும் | एतत् | இது [தலும் ஆகிய |
| खेदः च | துக்கமும் | सर्वं | யாவும் |
| हर्षः च | உத்ஸாஹமும் | ज्ञेयं | அறியத்தக்கது. |
| बलाबलं च | பலமும் பலமின்மை | युद्धकालः च | போர்க்குரிய காலமும் |
| भूमेः | பூமியின் [யும் | विज्ञेयः | கவனிக்கத்தக்கது. |

तव विश्रमहेतोश्च तथैषां रथवाजिनाम् । रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥ २१ ॥

| | | | |
|---|---|---|---|
| तव च | " தேவரீருக்கும் | रौद्रं खेदं | கொடிய களைப்பை |
| एषां | இந்த | वर्जयता | போக்குபவனாகிய |
| रथवाजिनां तथा | தேர்க்குதிரைகளுக் | मया | என்னால் |
| | கும் | इदं | இப்பொழுது |
| विश्रमहेतोः | களைப்பாறுவதற்காக | क्षमं | தக்கதே |
| | | कृतम् | புரியப்பட்டது. |

**न मया स्वेच्छया वीर रथोऽयमपवाहितः ॥ २२ ॥**

| | | | |
|---|---|---|---|
| वीर | "வீரரே! | स्वेच्छया | எனது மனம்போன்ற வாறாய் |
| मया | என்னால் | | |
| अयं | இந்த | अपवाहितः न | திருப்பிக்கொண்டு வரப்படவில்லை. |
| रथः | தேரானது | | |

**भर्तृस्नेहपरीतेन मयेदं यत्कृतं विभो ॥ २३ ॥**

| | | | |
|---|---|---|---|
| विभो | "பிரபுவே! | यत् | எதுவோ |
| मया | என்னால் | इदं | இது |
| भर्तृस्नेहपरीतेन | எஜமானரது அன்பிற் கிடுபட்டவனாய் | कृतम् | செய்யப்பட்டது. |

**आज्ञापय यथातत्त्वं वक्ष्यस्यरिनिषूदन। तत्करिष्याम्यहं वीर गतानृण्येन चेतसा ॥२४॥**

| | | | |
|---|---|---|---|
| अरिनिषूदन | "சத்ருஸம்ஹாரகரா | तत् | அதை |
| वीर | வீரரே! [கிய | अहं | நான் |
| आज्ञापय | உத்திரவிட்டருளும். | गतानृण्येन | கடமையாய்கொண்ட |
| यथातत्त्वं | எப்படியாய் | चेतसा | உள்ளத்துடன் |
| वक्ष्यसि | கட்டளையிடுவீரோ அவ்வண்ணமே | करिष्यामि | செய்துமுடிப்பேன்." |

**संतुष्टस्तेन वाक्येन रावणस्तस्य सारथेः। प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥**

| | | | |
|---|---|---|---|
| रावणः | ராவணன் | बहुविधं | பலவாறாய் |
| तस्य सारथेः | அந்த ஸாரதியின் | प्रशस्य | புகழ்ந்து |
| तेन | அந்த | युद्धलुब्धः | போராவல்கொண்டவனாய் |
| वाक्येन | சொல்லால் | | |
| सन्तुष्टः | களிப்புற்றவனாய் | इदं | பின்வருமாறு |
| एनं | இவனை | अब्रवीत् | ஆக்ஞாபித்தான்: |

**रथं शीघ्रमिमं सूत राघवाभिमुखं कुरु। नाहत्वा समरे शत्रून्निवर्तिष्यति रावणः ॥ २६ ॥**

| | | | |
|---|---|---|---|
| सूत | "சாரதி! | रावणः | ராவணன் |
| इमं रथं | இந்த ரதத்தை | समरे | போரில் |
| शीघ्रं | விரைவாய் | शत्रून् | பகைவர்களை |
| राघवाभिमुखं | ராமனுக்கெதிராய் | अहत्वा | வதைக்காது |
| कुरु | இருத்து. | निवर्तिष्यति न | திரும்பான்." |

**एवमुक्त्वा ततस्तुष्टो रावणो राक्षसेश्वरः। ददौ तस्मै शुभं ह्येकं हस्ताभरणमुत्तमम् ॥२७॥**

| | | | |
|---|---|---|---|
| राक्षसेश्वरः | ராக்ஷஸமன்னனாகிய | तस्मै | அவனுக்கு |
| रावणः | ராவணன் | एकं | ஒரு |
| एवं | மேற்கண்டவாறு | शुभं | அழகியதும் |
| उक्त्वा | ஆக்ஞாபித்துவிட்டு | उत्तमं | சிறந்ததுமான |
| ततः | அப்பொழுது | हस्ताभरणं हि | கரபூஷணத்தையும் |
| तुष्टः | சந்தோஷங்கொண்டவனாய் | ददौ | அளித்தான். |

श्रुत्वा रावणवाक्यं तु सारथिः संन्यवर्तत ॥ २८ ॥

| | | | |
|---|---|---|---|
| तु | அப்பொழுது | रावणवाक्यं | ராவணனது கட்டளை |
| सारथिः | சாரதியும் | श्रुत्वा | சிரமேற்கொண்டு [யை |
| | | संन्यवर्तत | திரும்பினான். |

ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान्स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥ २९ ॥

| | | | |
|---|---|---|---|
| सः | அந்த | ततः | அப்பொழுது |
| सारथिः | சாரதி | राक्षसेन्द्रस्य | ராக்ஷஸமன்னனது |
| ततः | அப்பொழுது | सः | அந்த |
| रावणवाक्यचोदितः | ராவணனது கட்டளை பெற்றவனாய் | महारथः | சிறந்த தேரும் |
| | | क्षणेन | நொடிப்பொழுதில் |
| हयान् | குதிரைகளை | रामस्य | ஸ்ரீராமருடைய |
| द्रुतं | விரைவாய் | रणाग्रतः | போர்முனையில் |
| प्रचोदयामास | தூண்டினான். | अभवत् | விளங்கிற்று. |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
युद्धकाण्डे षडुत्तरशततमः सर्गः ॥

आदितः श्लोकाः 19180 युद्धकाण्डे आदितः श्लोकाः 4689

## सप्तोत्तरशततमः सर्गः—நூற்றேழாவது ஸர்க்கம் ॥ १०७ ॥

### आदित्यहृदयोपदेशः—ஆதித்யஹ்ருதயோபதேசம்.

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ २ ॥

| | | | |
|---|---|---|---|
| दैवतैः | தேவர்களோடு | चिन्तया | கவலையுடன் |
| समागम्य | கூடி | स्थितं च | நின்றுகொண்டிருக்கும் |
| रणं | போரை | रावणं | ராவணனை |
| द्रष्टुं | பார்க்க | अग्रतः | முன்னே |
| अभ्यागतः | வந்த | दृष्ट्वा | கண்டு |
| भगवान् | ஷாட்குண்யபரிபூர்ண | युद्धाय | போருக்கு |
| अगस्त्यः | அகஸ்திய [ராகிய | समुपस्थितं | ஆயத்தராகிய |
| ऋषिः च | முனிவரும் | रामं | ஸ்ரீராமரை |
| ततः | அப்பொழுது | उपागम्य | அணுகி |
| युद्धपरिश्रान्तं | யுத்தத்தில் களைத்து | अब्रवीत् | பின்வருமாறு திருவாய்மலர்ந்தருளினார்: |
| समरे | போரில் | | |

राम राम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥ ४ ॥
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥

| | | | |
|---|---|---|---|
| वत्स | "குழந்தாய்! | जयावहं | வெற்றியை அளிப்பதும் |
| राम | அபிராமமாகிய | अक्षय्यं | அழிவற்றதும் |
| राम | ஸ்ரீராம! | परमं शिवं | மிக மங்களமானதும் |
| महाबाहो | மஹாபாகுவே! | सर्वमङ्गलमाङ्गल्यं | எல்லா மங்களங்களுக்கும் மங்களகரமானதும் |
| समरे | போரில் | सर्वपापप्रणाशनं | எல்லாப் பாபங்களையும் போக்கவல்லதும் |
| येन | எதனால் | चिन्ताशोकप्रशमनं | கவலையையும் சோகத்தையும் போக்கவல்லதும் |
| अरीन् | சத்ருக்கள் | आयुर्वर्धनं | ஆயுசை வளர்ப்பதும் |
| सर्वान् | யாவரையும் | उत्तमं | சிறந்ததுமான |
| विजयिष्यसि | வெற்றிபெறுவாயோ அதற்கு | आदित्यहृदयं | 'ஆதித்யஹிருதயத்தை' |
| शृणु | திருச்செவிசாய்ப்பாயாக. | नित्यं | எப்பொழுதும் |
| गुह्यं | ரகசியமானதும் | जपेत् | ஜபிக்கவேண்டும். |
| सनातनं | அநாதியானதும் | | |
| पुण्यं | பாவனமானதும் | | |
| सर्वशत्रुविनाशनं | எல்லாப்பகைவர்களையும் அழித்து | | |

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् । पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥

| | | | |
|---|---|---|---|
| रश्मिमन्तं | "கிரணங்கள் கொண்டவராய் | भास्करं | ஒளியைத்தருபவரும் |
| समुद्यन्तं | உதிப்பவரும் | भुवनेश्वरं | லோகநாதருமாகிய |
| देवासुरनमस्कृतं | தேவர்களாலும் அசுரர்களாலும் நமஸ்கரிக்கப்பட்டவரும் | विवस्वन्तं | சூரியபகவானை |
| | | पूजयस्व | பூஜிப்பாயாக. |

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणांल्लोकान्पाति गभस्तिभिः ॥

| | | | |
|---|---|---|---|
| एषः हि | "இவரோ | एषः | இவர் |
| सर्वदेवात्मकः | ஸர்வதேவஸ்வரூபி. | देवासुरगणान् | தேவாசுரகணங்களையும் |
| तेजस्वी | தேஜஸ்வீ. | लोकान् | உலகங்களையும் |
| रश्मिभावनः | கிரணங்களை ஆக்கியவர். | गभस्तिभिः | கிரணங்களால் |
| | | पाति | ரக்ஷிக்கின்றார். |

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः । महेन्द्रो धनदः कालो यमः सोमो ह्यपां पतिः ॥

| | | | |
|---|---|---|---|
| एषः हि | "இவர்தான் | महेन्द्रः | தேவேந்திரர்; |
| ब्रह्मा च | பிரம்மதேவர்; | धनदः | குபேரர்; |
| विष्णुः च | விஷ்ணுபகவான்; | कालः | காலமூர்த்தி; |
| शिवः | ருத்திரமூர்த்தி; | यमः | தர்மராஜர்; |
| स्कन्दः | ஷண்முகர்; | सोमः | சந்திரர்; |
| प्रजापतिः | பிரஜாபதிதேவர்; | अपां पतिः | வருணதேவர். |

**पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥**

| | |
|---|---|
| प्रभाकरः हि | "ஒளியைத்தருபவராகிய இவர்தான் |
| पितरः | பிதுர்க்கள்; |
| वसवः | வஸுதேவதைகள்; |
| साध्याः | ஸாத்யர்கள்; |
| अश्विनौ | அச்வினிதேவர்கள்; |
| मरुतः | மருத்துக்கள்; |
| मनुः | மனுபகவான்; |
| वायुः | வாயுதேவர்; |
| वह्निः | அக்னிதேவர்; |
| प्रजाप्राणः | பிரஜைகளின் உயிர்; |
| ऋतुकर्ता | ருதுக்களைப்படைத்தவர். |

**आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥**

| | |
|---|---|
| आदित्यः | "அதிதிதேவியின் புதல்வர்; |
| सविता | சிருஷ்டிப்பவர்; |
| सूर्यः | கிரியைகளைச் செய்யுமாறு தூண்டுபவர்; |
| खगः | ஆகாயத்தில் சஞ்சரிப்பவர்; |
| पूषा | மழையால் போஷிப்பவர்; |
| गभस्तिमान् | கிரணங்களையுடையவர்; |
| सुवर्णसदृशः | பொன்னிறம் கொண்டவர்; |
| भानुः | பிரகாசிப்பவர்; |
| हिरण्यरेताः | பொன்மயமான பிரம்மாண்டத்தை உண்டாக்கியவர்; |
| दिवाकरः | பகலை ஆக்கியவர். |

**हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनः शंभुस्त्वष्टा मार्तण्ड अंशुमान् ॥**

| | |
|---|---|
| हरिदश्वः | "பச்சைக்குதிரைகளைக்கொண்டவர்; |
| सहस्रार्चिः | பல கிரணங்களையுடையவர்; |
| सप्तसप्तिः | ஸப்த என்ற குதிரையையுடையவர்; |
| मरीचिमान् | ஒளிக்கதிர்களைக் கொண்டவர்; |
| तिमिरोन्मथनः | இருளையொழிப்பவர்; |
| शम्भुः | க்ஷேமத்தைத்தருபவர்; |
| त्वष्टा | ஸர்வஸம்ஹாரகர். |
| मार्तण्डः | ஸர்வசம்ஹாரத்தில் அழிந்தவற்றை மீண்டும் படைக்குமாறு தோன்றியவர்; |
| अंशुमान् | பிரகாசிப்பவர். |

**हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः । अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥**

| | |
|---|---|
| हिरण्यगर्भः | பிரம்மாண்டத்தின் நடுவில் விளங்குபவர்; |
| शिशिरः | (பணிந்தவர்களின் உள்ளத்தைக்)குளிரச் செய்பவர்; |
| तपनः | தபிக்கச்செய்பவர்; |
| भास्करः | ஒளியை உண்டாக்குபவர்; |
| रविः | யாவராலும் துதிக்கப்பட்டவர்; |
| अग्निगर्भः | பகலில் தம்மிடம் அக்னியை வைத்துக் கொண்டிருப்பவர்; |
| अदितेः | அதிதிதேவியின் |
| पुत्रः | புதல்வர்; |
| शङ्खः | சாயங்காலத்தில் சுயமாகவே தணிவையடைபவர்; |
| शिशिरनाशनः | பனியை நாசம்பண்ணுபவர். |

**व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः । घनवृष्टिरपां मित्रो विन्ध्यवीथी प्लवङ्गमः ॥**

| | | | |
|---|---|---|---|
| व्योमनाथः | "ஆகாயத்திற்கு மன்னவர்; | अपांमित्रः | தண்ணீர்க்கு நண்பர்; |
| तमोभेदी | ராகுவைப்பிளப்பவர்; | विन्ध्यवीथी | விந்தியமலையை தக்ஷிணாயனத்தில் செல்லும் வழியாகக்கொண்டவர்; |
| ऋग्यजुःसामपारगः | ரிக், யஜுஸ், ஸாமம், என்னும் வேதங்களின் கரையைக்கண்டவர்; | | |
| घनवृष्टिः | பெரும்மழையை உண்டாக்குபவர்; | प्लवङ्गमः | புனல்போல் ஆகாயமாகிய சமுத்திரத்தில் செல்பவர். |

**आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः । कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥**

| | | | |
|---|---|---|---|
| आतपी | "வெயிலையுடையவர்; | कविः | யாவராலும் துதிக்கப்பெற்றவர்; |
| मण्डली | வட்டவடிவமானவர்; | विश्वः | இவ்வுலகத்தை நிர்வஹிக்கின்றவர்; |
| मृत्युः | அடைந்தவராது பகைவர்களை நாசம் பண்ணுபவர்; | महातेजाः | பெருங்காந்திபொருந்தியவர்; |
| पिङ्गलः | உதயகாலத்தில் பொன்நிறமானவர்; | रक्तः | எல்லாரிடமும் அன்பு பாராட்டுபவர்; |
| सर्वतापनः | மத்தியான்னத்தில் எல்லாரையும் எரிக்கின்றவர்; | सर्वभवोद्भवः | எல்லாரது ஸம்ஸாரத்துக்கும் உத்பத்தி காரணர். |

**नक्षत्रग्रहताराणामधिपो विश्वभावनः । तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥१५॥**

| | | | |
|---|---|---|---|
| नक्षत्रग्रहताराणां | "நக்ஷத்திரங்கள், கிரஹங்கள், தாரைகள் இவைகளுக்கு | द्वादशात्मन् | (இந்திரன், தாதா, பகன், பூஷா, மித்திரன், வருணன், அர்யமன், அர்ச்சிஸ், விவஸ்வான், த்வஷ்டா, ஸவிதா, விஷ்ணு, என்ற) பன்னிரண்டுமூர்த்திகளாக இருப்பவரே! |
| अधिपः | தலைவர்; | | |
| विश्वभावनः | எல்லாவற்றையும் நிலைநிறுத்துபவர்; | | |
| तेजसां अपि | ஒளி பொருந்திய அக்னி முதலியவற்றுக்குள்ளும் | ते | தேவரீருக்கு |
| तेजस्वी | மிக்க ஒளிபொருந்தியவர்; | नमः | நமஸ்காரம் |
| | | अस्तु | விளங்கட்டும். |

**नमः पूर्वाय गिरये पश्चिमायाद्रये नमः। ज्योतिर्गणानां पतये दिनाधिपतये नमः॥ १६ ॥**

| | | | |
|---|---|---|---|
| पूर्वाय गिरये | "கிழக்குமலையை உதிக்குமிடமாக உடையவருக்கு | नमः | நமஸ்காரம். |
| नमः | நமஸ்காரம். | ज्योतिर्गणानां | ஜோதிஸ்ஸுக்களின் கூட்டங்களுக்கு |
| पश्चिमाय अद्रये | மேற்குமலையை அஸ்தமிக்குமிடமாக உடையவருக்கு | पतये | மன்னவரான |
| | | दिनाधिपतये | பகற்காலத்தின் அதிபதிக்கு |
| | | नमः | நமஸ்காரம். |

**जयाय जयभद्राय हर्यश्वाय नमो नमः। नमो नमः सहस्रांशो आदित्याय नमो नमः॥**

| | | | |
|---|---|---|---|
| जयाय | "உபாஸகருக்கு வெற்றிகொடுப்பவரும், | नमः नमः | விழுந்து விழுந்து நமஸ்காரம். |
| जयभद्राय | வெற்றி, க்ஷேமம், இவைகளை அளிப்பவருமான | सहस्रांशो | ஆயிரம் கிரணங்களை உடையவரே! |
| हर्यश्वाय | பச்சைவர்ணமுள்ள குதிரையை உடையவருக்கு | नमः नमः | விழுந்து விழுந்து நமஸ்காரம். |
| | | आदित्याय | அதிதிதேவியின் புதல்வருக்கு |
| | | नमः नमः | விழுந்துவிழுந்து நமஸ்காரம். |

**नम उग्राय वीराय सारङ्गाय नमो नमः। नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः॥**

| | | | |
|---|---|---|---|
| उग्राय | "உபாஸியாதவர்களிடம் கொடுமையை காட்டுகின்ற | नमः नमः | விழுந்து விழுந்து நமஸ்காரம். |
| वीराय | ஜனங்களை பலதொழிலில் மூட்டுகின்றவருக்கு | पद्मप्रबोधाय | தாமரைமலரை எழுப்புகின்றவருக்கு |
| नमः | நமஸ்காரம். | नमः | நமஸ்காரம். |
| सारङ्गाय | வெகுவேகமாக ஆகாயத்தில் சஞ்சரிப்பவருக்கு | मार्ताण्डाय | மார்த்தாண்டருக்கு |
| | | नमः नमः | பன்முறை நமஸ்காரம். |

**ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे। भास्वते सर्वभक्षाय रौद्राय वपुषे नमः॥ १९॥**

| | | | |
|---|---|---|---|
| ब्रह्मेशानाच्युतेशाय | "பிரம்மாவையும், சிவபிரானையும், விஷ்ணுவையும், எல்லா ஆபத்துகளிலும் பாலனம் பண்ணுகிறவரும் | आदित्यवर्चसे | ஆதித்யரூபமான |
| | | भास्वते | காந்தியையுடையவரும் |
| | | सर्वभक्षाय | எல்லாவற்றையும் அழிப்பவருமான |
| सूर्याय | ஜனங்களைத்தொழில் செய்யுமாறு ஏவுபவரும் | रौद्राय वपुषे | எல்லாவற்றையும் அழிக்கையில் கடுமையான உருவத்தையுடையவருக்கு |
| | | नमः | நமஸ்காரம். |

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने। कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥२०॥

| | | | |
|---|---|---|---|
| तमोघ्नाय | "இருளைப்போக்கு கின்றவரும் | अमितात्मने | அளவிடக்கூடாத ஸ்வரூபத்தை உடையவரும் |
| हिमघ्नाय | பனியைப்போக்கு கின்றவரும் | कृतघ्नघ्नाय | நன்றியற்றவர்களை நாசம்செய்கின்றவரும் |
| शत्रुघ्नाय | (தம்மை அடைந்தவரது) பகைவரை அழிப்பவரும் | देवाय | விளங்குபவருமான |
| | | ज्योतिषां पतये | தேஜஸ்ஸுகளின் |
| | | नमः | நமஸ்காரம். [பதிக்கு |

तप्तचामीकराभाय वह्नये विश्वकर्मणे। नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे॥ २१॥

| | | | |
|---|---|---|---|
| तप्तचामीकराभाय | "உருக்கிவிட்ட தங்க நிறம் கொண்டவரும் | तमोऽभिनिघ्नाय | அக்ஞானவிருளைப் பிளப்பவரும் |
| वह्नये | அக்னிரூபமாக நின்று ஹவிஸை வஹிப்பவரும் | रुचये | ஒளிவடிவமானவருமான |
| विश्वकर्मणे | எல்லா ஜகத்துக்கும் கர்த்தாவும் | लोकसाक्षिणे | அந்தர்யாமியாய் இருத்தலால் ஜனங்களின் புண்ய பாபங்களுக்கு சாக்ஷியானவருக்கு |
| | | नमः | நமஸ்காரம். |

नाशयत्येष वै भूतं तदेव सृजति प्रभुः। पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२॥

| | | | |
|---|---|---|---|
| एषः वै | "இவரே | पायति | எல்லாவற்றையும் வற்ற அடிக்கின்றார். |
| भूतं | ஜகத்தை | एषः | இவர் |
| नाशयति | அழிக்கின்றார். | तपति | எரித்துவிடுகின்றார். |
| प्रभुः | பிரபுவாகுமிவர் | एषः | இவர் |
| तदेव | அதையே | गभस्तिभिः | கிரணங்களால் |
| सृजति | உண்டாக்குகின்றார். | वर्षति | மழையைப் பொழிகின்றார். |
| एषः | இவர் | | |

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः। एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥

| | | | |
|---|---|---|---|
| एषः | "இவர் | एषः एव | இவர்தான் |
| भूतेषु | பிராணிகள் | अग्निहोत्रं च | அக்னிஹோத்ரமாயிருப்பவர். |
| सुप्तेषु | உறங்கும்பொழுது | अग्निहोत्रिणां | அக்னிஹோத்ரம் செய்பவர்களுக்கு |
| परिनिष्ठितः | அந்தர்யாமியாகவிருந்து | फलं च एव | பயனுகவுமிருப்பவர். |
| जागर्ति | விழித்திருக்கின்றார். | | |

**वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥**

| | | | |
|---|---|---|---|
| वेदाः च | “வேதங்களும் | कृत्यानि च | க்ரியைகளோ அவைகளும் |
| क्रतवः च | யாகங்களும் | सर्वः | எல்லாமும் |
| क्रतूनां | யாகங்களின் | एषः | இந்த |
| फलं एव | பயனும் | प्रभुः | ஸர்வசக்தராகிய |
| लोकेषु | உலகங்களின் | रविः एव | சூர்யபகவானே. |
| यानि | எந்த | | |

**एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च । कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥२५॥**

| | | | |
|---|---|---|---|
| राघव | “ஸ்ரீராம! | भयेषु च | மனக்கலவரங்களிலும் |
| कश्चित् | ஒரு | एनं | இதை (ஆதித்யஹிருதயத்தை) |
| पुरुषः | புருஷன் | कीर्तयन् | ஓதுபவனாய் |
| आपत्सु | ஆபத்துக்களிலும் | अवसीदति न | வருந்தாதிருக்கின்றான். |
| कृच्छ्रेषु | கஷ்டங்களிலும் | | |
| कान्तारेषु | காடுகளிலும் | | |

**पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥२६॥**

| | | | |
|---|---|---|---|
| एकाग्रः | “ஏகாக்ரசித்தனாய் | पूजयस्व | பூஜிப்பாயாக. |
| देवदेवं | தேவர்களுக்கு தேவரும் | एतत् | இதை |
| जगत्पतिं | லோகங்களுக்கு பதியுமாகிற | त्रिगुणितं | மும்முறை |
| एनं | இவரை | जप्त्वा | ஜபித்து |
| | | युद्धेषु | போர்களில் |
| | | विजयिष्यसि | வெற்றிபெறுவாய். |

**अस्मिन्क्षणे महाबाहो रावणं त्वं वधिष्यसि । एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥**

| | | | |
|---|---|---|---|
| महाबाहो | “மஹாபாஹுவே! | तदा | அப்பொழுது |
| अस्मिन् | இந்த | अगस्त्यः | அகஸ்தியர் |
| क्षणे | க்ஷணமே | एवं | இவ்வாறு |
| त्वं | நீ | उक्त्वा | மொழிந்தருளிவிட்டு |
| रावणं | ராவணனை | यथागतं च | வந்தவழியே |
| वधिष्यसि | வதைப்பாய்.” | जगाम | திரும்பிச்சென்றார். |

**एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥२८॥**

| | | | |
|---|---|---|---|
| महातेजाः | மகாதேஜஸ்வியாகிய அவர் | अभवत् | ஆனார். |
| एतत् | இதற்கு | राघवः | ஸ்ரீராமர் |
| श्रुत्वा | திருச்செவிசாய்த்து | सुप्रीतः | மிகக்களிப்புற்றவராய் |
| तदा | அப்பொழுது | प्रयतात्मवान् | பொறிகளை அடக்கியவராய் |
| नष्टशोकः | கவலை நீங்கியவராய் | धारयामास | அதைத்யானித்தார். |

आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान्। त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान्॥

| | | | |
|---|---|---|---|
| वीर्यवान् | வீர்யசாலியாகுமவர் | आदित्यं | சூரியனை |
| त्रिः | மும்முறை | प्रेक्ष्य | பார்த்துக்கொண்டு |
| आचम्य | ஆசமனஞ்செய்து | जप्त्वा | ஜபித்து |
| शुचिः | பரிசுத்தராக | तु | அப்பொழுது |
| भूत्वा | ஆகி | परं | மிகுந்த |
| धनुः | வில்லை | हर्षं | ஆனந்தத்தை |
| आदाय | கைக்கொண்டு | अवाप्तवान् | கொண்டார். |

रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत्। सर्वयत्नेन महता वधे तस्य धृतोऽभवत्॥

| | | | |
|---|---|---|---|
| हृष्टात्मा | களித்த உள்ளங் கொண்ட அவர் | महता | பெரும் |
| | | सर्वयत्नेन | முழு யத்தனத்துடன் |
| रावणं | ராவணனை | तस्य | அவனுடைய |
| प्रेक्ष्य | பார்த்து | वधे | வதையில் |
| युद्धाय | யுத்தத்திற்கு | धृतः | உறுதிகொண்டவராய் |
| समुपागमत् | நெருங்கிவந்தார். | अभवत् | இருந்தார். |

अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥

| | | | |
|---|---|---|---|
| अथ | அப்பொழுது | निशिचरपतिसंक्षयं | ராவணனது நாசத்தை |
| सुरगणमध्यगतः | தேவகணங்களின் நடுவிலிருக்கும் | विदित्वा | அனுக்ரகித்தருளி விட்டு |
| रविः | சூரியபகவான் | | |
| परमं | மிக | त्वर | "துரிதப்படுவாயாக" |
| मुदितमनाः | உள்ளங்களித்து | इति | என்று |
| प्रहृष्यमाणः | உத்ஸாஹங்கொண்டவராய் | वचः | திருமொழியை |
| रामं | ஸ்ரீராமரை | अवदत् | திருவாய்மலர்ந்தருளினார். |
| निरीक्ष्य | பார்த்து | | |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
युद्धकाण्डे सप्तोत्तरशततमः सर्गः ॥

आदितः श्लोकाः 19674 युद्धकाण्डे आदितः श्लोकाः 4999



रावणदुर्निमित्तानि — ராவணனது அபசகுனங்கள்.

स रथं सारथिर्हृष्टः परसैन्यप्रधर्षणम् । गन्धर्वनगराकारं समुच्छ्रितपताकिनम् ॥ १ ॥
युक्तं परमसंपन्नैर्वाजिभिर्हेममालिभिः । युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम् ॥ २ ॥
ग्रसन्तमिव चाकाशं नादयन्तं वसुन्धराम् । प्रणाशं परसैन्यानां स्वसैन्यानां प्रहर्षणम् ॥
रावणस्य रथं क्षिप्रं चोदयामास सारथिः ॥ ३ ॥

| | | | |
|---|---|---|---|
| सः | அந்த | पूर्णं | நிறைந்துள்ளதும் |
| सारथिः | தேரைநடத்தும் | पताकाध्वज-मालिनं | நிசான்கள், கொடிகள் இவைகளின் வரிசை களமைந்ததும் |
| सारथिः | சாரதி | आकाशं च | ஆகாயத்தையே |
| हृष्टः | களிப்புற்றவனாய் | ग्रसन्तं इव | விழுங்குவதுபோலி ருக்கிறதும் |
| परसैन्यप्रधर्षणं | சத்ருஸைன்யங்களை யழிக்கின்ற | वसुन्धरां | பூமியை |
| रथं | ரதமானதும் | नादयन्तं | சத்திக்கச்செய்கிற தும் |
| गन्धर्वनगराकारं | கந்தர்வநகரத்தை ஒத்ததும் | परसैन्यानां | சத்ருசைன்யங்களை |
| समुच्छ्रितपताकिनं | உயர்த்தப்பட்ட நிசான்களுடையதும் | प्रणाशं | அழிப்பதும் |
| परमसम्पन्नैः | மிகவேகங்கொண்ட வைகளும் | स्वसैन्यानां | தனது சைன்யங்களை |
| हेममालिभिः | ஸ்வர்ணமாலைகள் பூட் டப்பெற்றவைகளு மான | प्रहर्षणं | உத்ஸாஹப்படுத்து வதுமான |
| | | रावणस्य | ராவணனது |
| वाजिभिः | குதிரைகளால் | रथं | தேரை |
| युक्तं | பூட்டப்பெற்றதும் | क्षिप्रं | விரைவாய் |
| युद्धोपकरणैः | யுத்தக்கருவிகளால் | चोदयामास | செலுத்தினன். |

तमापतन्तं सहसा स्वनवन्तं महास्वनम् । रथं राक्षसराजस्य नरराजो ददर्श ह ॥ ४ ॥

| | | | |
|---|---|---|---|
| नरराजः | மானிடசக்ரவர்த்தி (ஸ்ரீராமர்) | स्वनवन्तं | சப்திக்கின்றதுமான |
| | | राक्षसराजस्य | அரக்கமன்னனது |
| सहसा | விரைவாய் | तं | அந்த |
| आपतन्तं | எதிர்த்துவருகிறதும் | रथं | ரதத்தை |
| महास्वनं | பேரோசையாய் | ददर्श ह | கண்டார். |

कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा । दीप्यमानमिवाकाशे विमानं सूर्यवर्चसम् ॥५॥
तडित्पताकागहनं दर्शितेन्द्रायुधायुधम् । शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् ॥ ६ ॥
तं दृष्ट्वा मेघसङ्काशमापतन्तं रथं रिपोः । गिरेर्वज्राभिमृष्टस्य दीर्यतः सदृशस्वनम् ॥ ७ ॥
विस्फारयन्वै वेगेन बालचन्द्रनतं धनुः । उवाच मातलिं रामः सहस्राक्षस्य सारथिम् ॥

| | |
|---|---|
| रामः | ஸ்ரீராமர் |
| कृष्णवाजिसमायुक्तं | கறுத்த குதிரைகள் பூட்டப்பெற்றதும் |
| रौद्रेण | உக்கிரமான |
| वर्चसा | ஒளியுடன் |
| युक्तं | கூடியதும் |
| आकाशे | ஆகாயத்தில் |
| विमानं इव | விமானம்போல் |
| दीप्यमानं | பிரகாசிக்கின்றதும் |
| सूर्यवर्चसं | சூரியனொளிகொண்டதும் |
| तडित्पताकागहनं | மின்னல்போன்ற கொடிகளுற்றதும் |
| दर्शितेन्द्रायुधायुधं | இந்திராயுதங்கள்போன்ற ஆயுதங்களை தோற்றுவிப்பதும் |
| धारासारं | மழைத்தாரையை பொழியும் |
| अम्बुदं इव | மேகம்போலவே |
| शरधाराः | சரமாரிகளை |
| विमुञ्चन्तं | பொழிகின்றதும் |
| मेघसङ्काशं | மேகத்தை நிகர்த்ததும் |
| वज्राभिमृष्टस्य | வஜ்ராயுதத்தால் தாக்கப்பட்டு |
| दीर्यतः | வெடிக்கும் |
| गिरेः | மலைக்கு |
| सदृशस्वनं | ஒத்த ஒலிகொண்டு |
| आपतन्तं | எதிர்த்துவருவதுமான |
| तं | அந்த |
| रथं | ரதத்தை |
| दृष्ट्वा | பார்த்து |
| वेगेन | வேகமாய் |
| बालचन्द्रनतं | இளம்பிறை சந்திரனை நிகர்த்து வளைந்த |
| धनुः | வில்லை |
| विस्फारयन् वै | நாணொலி செய்கின்றவராய் |
| सहस्राक्षस्य | இந்திரனது |
| सारथिं | சாரதியாகிய |
| मातलिं | மாதலியைப்பார்த்து |
| उवाच | பின்வருமாறு புகன்றார்: |

**मातले पश्य संरब्धमापतन्तं रथं रिपोः ॥ ९ ॥**

| | |
|---|---|
| मातले | "மாதலியே! |
| रिपोः | சத்ருவினது |
| संरब्धं | மிகவேகமாய் |
| आपतन्तं | எதிர்த்துவருகின்ற |
| रथं पश्य | ரதத்தைப் பார். |

**यथाऽपसव्यं पतता वेगेन महता पुनः। समरे हन्तुमात्मानं तथा तेन कृता मतिः॥ १० ॥**

| | |
|---|---|
| महता | "பெரும் |
| वेगेन | வேகத்துடன் |
| अपसव्यं तथा | அப்பிரதக்ஷிணமாகவே |
| पुनः | மீளவும் |
| पतता | வரும் |
| तेन | அவனால் (ராவணனால்) |
| समरे | போரில் |
| आत्मानं | தன்னை |
| हन्तुं | வதைத்துக்கொள்ள |
| मतिः | புத்தியானது |
| कृता यथा | கொள்ளப்பட்டிருக்கின்றதுபோலும். |

**तदप्रमादमातिष्ठन्प्रत्युद्गच्छ रथं रिपोः। विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् ॥ ११ ॥**

| | |
|---|---|
| तत् | "ஆகையால் |
| अप्रमादं | ஜாக்கிரதையாய் |
| आतिष्ठन् | இருப்பவனாய் |
| रिपोः | சத்ருவின் |
| रथं | ரதத்தை நோக்கி |
| प्रत्युद्गच्छ | எதிர்த்து செல்லுவாயாக. |
| उत्थितं मेघं | கிளம்பிய மேகத்தை |
| वायुः | காற்று |
| इव | எவ்வண்ணமோ அவ்வண்ணமே |
| विध्वंसयितुं | அவனை அழிக்க |
| इच्छामि | விரும்புகிறேன். |

